# Prachi Prajna - संस्कृतवार्ता / News on Sanskrit

# संस्कृतवार्ताः

ISSN 2348 – 8417

A Peer Reviewed Online Journal in Sanskrit

पुनरीक्षिता सन्दर्भिता अन्तर्जालशोधपत्रिका

प्राचीमनु प्रदिशं प्रेहि विद्वान्, शुक्लयजुर्वेदः, वा. मा. सं., 7.66

अष्टमाङ्कः (दशमवर्षः), श्रावणमासः, विक्रमसंवत् – 2080

Issue - 9 ( Year – X ), September – 2023

Prachi Prajna is an eco-friendly journal

&

contributes to green solution to environmental hazards

वनस्पतिभिः पृथिवी सजोषा उभे रोदसी परि पासतो नः ॥ ऋग्वेदः/शाकलसंहिता/7.34.23

The pair of heaven and the earth consentient with the forest lords, and both the world-halves, pressure for us those riches.

कृपया संस्कृतसम्बन्धिकार्यक्रमाणां वार्ताः MS Word File मध्ये Arial Unicode MS(Devanagari) Font माध्यमेन टङ्कयित्वा, वार्तासम्बन्धिचित्राणि च JPEG प्रारूपमाश्रित्य 50 kb मध्ये अभिसंक्षिप्य prachiprajnaenb@gmail.com इत्यत्र प्रेषयन्तु।

(Please type your news in Sanskrit in Arial Unicode MS(Devanagari) on the MS Word File only and email to prachiprajnaenb@gmail.com along with compressed photos in JPEG format (up to 5) not more than 50kb each.)


सुश्रीः यदुश्रीः

सुश्रीः अदितिः

डॉ. (श्रीमती) एस्. टी. पी. कनकवल्ली

सुज्ञानकुमारमाहान्तिः

मुख्यसम्पादकः

संस्कृतसंभाषण–कार्यशाला

आयोजकाः – काशी हिंदू विश्वविद्यालयस्य धर्मशास्त्र–मीमांसा–विभागः तथा संस्कृतभारती काशी

स्थानम् – संस्कृतविद्या–धर्मविज्ञान–संकायः, काशी हिंदू विश्वविद्यालयः

दिनाङ्कः – १५.०८.२०२३ - २९.०८.२०२३

वार्ताप्रेषकः – सुजीतः त्यागी

अद्य काशी–हिंदू–विश्वविद्यालयस्य धर्मशास्त्र–मीमांसा–विभागः तथा संस्कृतभारती काशी इत्यनयोः संयुक्ततत्वावधाने संस्कृतविद्या–धर्मविज्ञान–संकाये संस्कृतसंभाषण–कार्यशालायाः प्रारंभः जातः। इयं कार्यशाला पंचदशदिवसीया। अस्याः कार्यशालायाः उद्घाटनसत्रस्य मुख्यातिथिः प्रो. गोपबंधुः मिश्रः अध्यक्षः प्रो. कमलेशः झा सारस्वतातिथिः प्रो. रामनारायणः द्विवेदी तथा विशिष्टातिथिः श्री देवेंद्रः पंड्या महोदयाः आसन्। कार्यक्रमस्य संचालनं डॉ०श्रीरामः ए. एस., विषयप्रवर्तनं डॉ०नारायणप्रसादः भट्टाराई, अतिथीनां स्वागतं विभागाध्यक्षः प्रो. माधवः जनार्दनः रटाटे तथा धन्यवादज्ञापनं प्रो. शंकरकुमारमिश्रः अकरोत्। अवसरेऽस्मिन् कार्यशालायाः प्रशिक्षकः डॉ० सुजीतकुमारत्यागीमहोदयस्य सम्माननं जातम् तथा अत्यंतरोचकशैल्या डॉ० त्यागी प्रशिक्षणं प्रारब्धवान्। मुख्यातिथिः प्रो. गोपबंधुः मिश्रमहोदयः स्वकीये संबोधने उवाच यत् अस्माभिः स्वकीयं भाषणं संभाषणं प्रापणीयम्। अस्माकं दायित्वमिदं

यत् वयं संस्कृतमयजीवनं जीवेम तथा सर्वदा लोकहिताय कार्यं कुर्याम। संस्कृतभारत्याः गीतेषु अपि संदेशोऽयमुल्लिखितः। संभाषणप्रक्रिया अस्माभिः आजीवनं परिपालनीया। सारस्वतातिथिः प्रो. रामनारायणः द्विवेदीमहोदयः प्रतिभागीनां स्वागतं कुर्वन् विभागमायोजनाय वर्धापनाः शुभकामनाश्च प्रदत्तवान्। मुख्यातिथिः देवेंद्रः पण्ड्यामहोदयः जगाद– इत्थं कार्यशाला संपूर्णभारतवर्षे प्रतिग्रामे प्रतिनगरे आयुनक्ति तथा शीघ्रमेव शास्त्र-शालानामपि आयोजनं संस्कृतभारतीद्वारा करिष्यते। अवसरेऽस्मिन् प्रो. पतंजलिमिश्रः प्रो. अशोककुमारजैनः प्रो. रामजीवनमिश्रः डॉ. सुभाषपांडेयः डॉ. सिद्धिदात्री भारद्वाजः डॉ. सुरेशचंद्रब्रह्मा डॉ. उदयनारायण उपाध्यायः डॉ. उदयप्रतापभारती उपस्थिताः आसन्। २00 प्रतिभागिनः अस्यां कार्यशालायां सम्मिलिताः।

कार्यशालायाः संपूर्तिसत्रे मुख्यातिथिः रानी–पद्मावती–संस्कृत–महाविद्यालयस्य साहित्य–विभागाध्यक्षः संयोजक–शिक्षक–प्रकोष्ठ–काशीक्षेत्रस्य प्रो. कमलेश–झा  सारस्वतातिथिः  वेद–विभागाध्यक्षः प्रो. पतंजलिमिश्रः विशिष्टातिथिः व्याकरण–विभागाध्यक्षः प्रो. रामनारायणद्विवेदी एवं कार्यक्रमाध्यक्षः संकायप्रमुखः प्रो. कमलेशझा कार्यशालासंयोजकः प्रो. शंकरमिश्रः सहसंयोजकः डॉ. श्रीराम एस डॉ. नारायणप्रसादभट्टराई एवं कार्यशालाप्रशिक्षकः डॉ. सुजीतकुमारत्यागी एंव संकायशिक्षकानां प्रतिभागीनामुपस्थितिः आसीत्। कार्यशालायाः संचालकः डॉ. सुजीतकुमारत्यागी स्वप्रशिक्षणानुभवं सर्वान् प्रति प्रासरत् तथा उदितवान् यत् काश्यां संभाषणं प्रति छात्राणां संख्यावृद्धिः भवति एवं अत्यंतोत्साहेन संभाषणाभ्यासोऽपि कुर्वन्ति। मुख्यातिथिः प्रो. कमलेशझामहोदयः स्वसंबोधनेऽवदत् यत् भारतीय–नवीन–शिक्षा–नीतिः इत्यनेन भारतः

पुनः विश्वगुरुः निर्माय तत्परोऽस्ति। संस्कृतभाषामाध्यमेन राष्ट्रविकासः राष्ट्रनिर्माणश्च कर्तुं शक्नुमः। विशिष्टातिथिः प्रो. रामनारायणद्विवेदीमहोदय उक्तवान् यत्  संस्कृतसंभाषणाभ्यासस्य निरंतरता भवेत्। व्याकरण–विभागपक्षतः शीघ्रमेव इत्थं कार्यशालायाः आयोजनं पुनः भविष्यति। सारस्वतातिथिः प्रो. पतंजलिमिश्रमहोदयोऽकथयत् यत् व्यवहारिकजीवने संस्कृतसंभाषणेन जीवनः मधुरमयः एवं वाणी संस्कारयुक्ता भवति। अवसरेऽस्मिन्  वैदिकमंगलाचरणं नवीनकुमारवासुदेवः अभिषेकतिवारी पौराणिकमंगलाचरणं अम्बुजमिश्रः कुलगीतं जयापाण्डेयः आयुषीआन्या संस्कृतगीतं देवहूतिमिश्रा एवं आयुषी तथा आदर्शकुमारगौतमः शीतांशुदुबे अक्षयः एवं देवहूतिः कार्यशालायाः स्वानुभवकथनमवदन्।

एकदिवसीया वेद-गोष्ठी

आयोजनम् – wider Association for Vedic studies (WAVES) इत्यस्य युवशाखायाः तरुणतरङ्गेत्याख्यायाः संयुक्ततत्वाधानम्

स्थानम् – वाराणसी

दिनाङ्कः – २०२३तमे वर्षेसितम्बर-मासस्य २४ दिनाङ्के

वार्ताप्रेषकः – डा.धनञ्जय कुमार आचार्य, सहायक आचार्य,
संस्कृत, दिल्ली विश्वविद्यालय
जनसम्पर्क- अधिकारी, वेव्स (भारतम्)

दिल्ली-नगरस्य वेदसंस्थानस्य wider Association for Vedic studies (WAVES) इत्यस्य युवशाखायाः तरुणतरङ्गेत्याख्यायाः संयुक्ततत्वाधाने २०२३ तमवर्षस्य सितम्बर-मासस्य २४ दिनाङ्के एकदिवसीया वेद-गोष्ठी आयोजिता, यस्मिन् १५ प्रख्यातविद्वांसः अनेके शोधच्छात्राः च भागं गृहीतवन्तः स्वशोधपत्रं च प्रस्तुतवन्तः । प्रतिभागिषु वेदसंस्थानस्य अध्यक्षः प्रद्युम्नशर्ममहोदयः, वेदसंस्थानस्य निर्देशकः डॉ. देवकृष्णदासः, वेव्स इत्यस्याध्यक्षा आचार्या शशिः तिवारी, उत्तराखण्डसंस्कृतविश्वविद्यालयस्य कुलपतिः आचार्यः दिनेशचन्द्रश्शास्त्री वेव्स इत्यस्य महासचिवः आचार्यः रणजित् बेहेरा, वेव्स इत्यस्य सचिव: डॉ. अपर्णा धीरखंडेलवाल, वेव्स इत्यस्य जनसंपर्काधिकारी डॉ. धनंजय कुमारआचार्यः, वेव्स-तरुणतरङ्गस्य अध्यक्षा डॉ. करुणा आर्या, डॉ. वेदव्रत आलोक, डॉ. आशालता पाण्डेय, डॉ. ललिता जुनेजा, डॉ. प्रेम देवली, डॉ. उमा आर्या, प्रोफेसर एम. एम. बजाज, डॉ. विजेन्द्रः, आचार्यः देवेन्द्रप्रसादमिश्रः, डॉ मीना कुमारी, डॉ नीलम गौड, डॉ सुमन चेत्येतानि नामान्युल्लेखनीयानि सन्ति, येषां विचारमाध्यमेन वेदविमर्शस्य नूतनाः पक्षाः समुद्घाटिताः। वेदसंस्थानस्य पत्रिकायां वेदसवितायां चितानि कानिचन शोधपत्राणि प्रकाशयिष्यन्ते, यस्मात् अन्ये विद्वांसः अपि लाभं ग्रहीतुं समर्थाः भविष्यन्ति। कोरोनाकालानन्तरं वेव्स इत्यस्य एषा प्रथमा प्रत्यक्षसभा आसीत्, यस्मिन् तरुणतरङ्गः उत्साहेन भागं गृहीतवान्, वेदसंस्थानेन च तस्मै पूर्णसहयोगः प्रदत्तः। प्रेक्षकाणां दृष्ट्यायं कार्यक्रमोऽतीव सफलोऽभवत् ।

संस्कृतसप्ताहावसरे कार्यक्रमः

आयोजकः – नवयुगविद्यामंदिरइंटरकॉलेज–चौकाघाट

स्थानम् – वाराणसी

दिनाङ्कः – ०२.०९.२०२३

वार्ताप्रेषकः – सुजीतः त्यागी

नवयुग–विद्यामंदिर–इंटरकॉलेज–चौकाघाट–वाराणस्यां अद्य संस्कृतसप्ताहस्य सम्पूर्तिसत्रे संपन्नः कार्यक्रमस्य मुख्यातिथिः संस्कृत–विद्याविभाग–संपूर्णानंदविश्वविद्यालयस्य आचार्यः एवं संस्कृतभारती काशी महानगर–अध्यक्षः प्रो. रविशंकरपाण्डेयः अकथयत् यत वेदः पूर्णतः एकं विज्ञानमस्ति। बालानां सर्वांगीणविकासाय संस्कृतं विज्ञानञ्च उभयोः आवश्यकता वर्तते। संस्कृतसंभाषणस्य निरंतराभ्यासः एवं लघु–लघु वाक्यमाध्यमेन संस्कृतप्रयोगः निरंतरं भवेत्। मुख्यातिथयः छात्रासु भाषाविकासैः सह अन्यविषयेषु अपि छात्राणां प्रतिभां दृष्ट्वा तत्रत्यः अध्यापकान् प्रति आभारव्यक्तमकुर्वन् तथा तेषां सर्वांगीणोत्थानस्य नैकेषु बिंदुषु आशीर्वचः प्राददुः। कार्यक्रमाध्यक्षः प्रधानाचार्यः डॉ. राजेशकुमारपांडेयः अवदत् यत् अत्रत्यः छात्राः शिक्षकमार्गदर्शने निरंतर–संस्कृताभ्यासं कुर्वन्ति तथा आगतदिवसेषु सम्पूर्णवातावरणं संस्कृतमयं भविष्यति। कार्यक्रमस्य मुख्यसंयोजकः संस्कृतभारती काशीप्रांत–शिक्षण–प्रमुखः एवं विद्यालयस्य शिक्षकः डॉ. अशोकचौधरी अतिथीनां स्वागतभाषण एवं संस्कृतसप्ताहे भवन्तः प्रतियोगितानां विषयप्रवर्तनमकरोत् अकथयच्च यत् २८ अगस्तमासतः ३ सितम्बरपर्यन्तं संस्कृतसप्ताहे संस्कृत–गीत–

प्रतियोगिता शब्दरूप–स्मरण–प्रतियोगिता संख्या–स्मरण–प्रतियोगिता भाषण–प्रातियोगिता इत्यादयः अनेकप्रतियोगितानामायोजनं अभवत् यस्मिन् छात्राः अत्यंतोत्साहेन भागं गृहीतवत्यः। कार्यक्रमे  संस्कृतभारती–महानगरकाशी–महाविद्यालय–विद्यार्थी–प्रमुखः डॉ. सुजीतकुमारत्यागी उषा यादवः मोनिका वर्मा जितेंद्रः रॉयः राणाप्रताप–कनौजिया आनंद–प्रकाश–रंजीतकुमारः सर्वेश–पांडेयः आदिः उपस्थिताः आसन्। कार्यक्रमस्य संचालनं विद्यालयस्य छात्रा कोमल–भारती एवं धन्यवादज्ञापनं संजू–पटेलः अकरोत्।

बाँदाजनपदस्य विविधविद्यालयेषु संस्कृतसप्ताहस्य आचरणम्

आयोजकः – संस्कृतभारती कानपुरप्रान्तः

दिनाङ्कः – २९.०८.२०२३

वार्ताप्रेषकः – आचार्यदीनदयालशुक्ल:

वार्तासौजन्यम् – ट्विंकलमोहान्तिः

आविश्वे सम्प्रति संस्कृतदिवसमालक्ष्य सर्वत्र संस्कृतसप्ताहस्य आचरणं विविधसंस्थासु संस्कृतज्ञै: विधीयमानं वर्तते। संस्कृतभारतीकानपुरप्रान्तस्य बाँदाजनपदस्य विभिन्नसंस्थासु तथा महाविद्यालयेषु संस्कृतसप्ताहस्य आयोजनं कार्यकर्तार: कुर्वन्ति। अस्मिन्नुपक्रमे प्रथमदिवसे बाँदाजनपदस्थ दयानन्द-एग्लो-वैदिक-इण्टर-कालेज इत्यस्मिन् विद्यालये श्रीजानकीशरणशुक्लवर्य: तथा च श्रीमान् जितेन्द्रद्विवेदीवर्य: विद्यालयीयछात्रै: सह मिलित्वा गीतापाठं

कृतवन्तः। अथ च द्वितीये दिवसे अद्य पण्डितजवाहर-लाल-नेहरू-इण्टर-कॉलेज–विद्यालये श्रीमान् शिवपूजनवर्याणां सानिध्ये संस्कृतसप्ताहोपलक्ष्ये संस्कृतकार्यक्रमः आयोजितः। पुनश्च वृह्मविज्ञान-इण्टर-कालेज इत्यस्मिन् विद्यालये प्रधानाचार्यः आचार्यशिवदत्तत्रिपाठिमहाशयः स्वीयोद्बोधने कथितवान् यत् "भाषासु मुख्या मधुरा दिव्या गीर्वाण भारती" इति अतः अस्माभिः सर्वैः संस्कृतम् अध्येतव्यम्। छात्राः संस्कृतगीतानि श्लोकान् च पठितवन्तः। अवसरेऽस्मिन् श्रीगिरजेशमिश्रः सञ्चालनं तथा श्री अरुणकुमारसिंहः , कमलेशकुमारः, श्यामनिगम इत्यादयः शिक्षकाः सहयोगमाचरितवन्तः। तृतीये दिवसे अतर्रा पी०जी० महाविद्यालयः अतर्रा बांदायामपि संस्कृतसप्ताहसमारोहः आयोजितः तत्र आतिथ्येन डॉ. शिवदत्तत्रिपाठिवर्याः समुपस्थिताः। सङ्घटनस्य विभागसंयोजकैः डॉ. रत्नेशत्रिवेदिवर्यैः स्पष्टीकृतं यत् संस्कृतसप्ताहस्य आगामि अवशिष्टदिनेष्वपि विद्यालयस्तरे तथा समाजस्तरे विविधाः प्रतिस्पर्धाः छात्रेभ्यः तथा शोभायात्रायाः आयोजनं कार्यकर्तारः करिष्यन्ति। सामूहिकसमारोपकार्यक्रमः अपि स्थानीयस्तरे भविता। वन्दे संस्कृतमातरम्।।

शिक्षकदिवसावसरे अनौपचारिकसंस्कृतशिक्षणकेन्द्रस्य उद्घाटनम्

आयोजकः – केन्द्रीयसंस्कृतविश्वविद्यालयः, नवदेहली

स्थानम् –सञ्जयशिक्षकप्रशिक्षणमहाविद्यालयः, जयपुरम्

दिनाङ्कः – ०५.०९.२०२३

वार्ताप्रेषकः – डॉ० महेशकुमारपारिक:

वार्तासौजन्यम् – ट्विंकलमोहान्तिः

केन्द्रीयसंस्कृतविश्वविद्यालय:, नवदेहली द्वारा सञ्चालितम् अनौपचारिकसंस्कृतशिक्षणयोजनान्तर्गतं जयपुरस्थ सञ्जयशिक्षकप्रशिक्षणमहाविद्यालये नूतनसत्रस्य शुभारम्भ: शिक्षकदिवसावसरे संस्थाप्रमुखद्वारा दीपप्रज्वालनेनाभवत्। केन्द्रीय-संस्कृत-विश्वविद्यालयस्य तत्त्वावधानेन सञ्चालिते अनौपचारिक–संस्कृत–शिक्षण–केन्द्रे विश्वसंस्कृत–दिवस–समारोहः अपि गतसप्ताहे समायोजितः आसीत्। तस्मिन् समारोहे विविधा: स्पर्धा: अपि सञ्जाता:। कार्यक्रमेऽस्मिन् प्रतिभागिभ्य: पुरस्कार वितरणमपि कृतम्। तत्रादौ दीपप्रज्ज्वलनपुरस्सरं शारदार्चनेन वैदिकमङ्गलाचरणेन अतिथिभिः कार्यक्रमस्य शुभारम्भ: विहितः। प्रास्ताविकोद्बोधने केन्द्रशिक्षकेण संस्कृतसस्य विषये अपि च संस्कृतस्य महत्त्वं प्रतिपादयन् प्रोक्तं यत् अधुना एतत् विश्व-संस्कृतदिनम् अथवा विश्वसंस्कृतदिवस: भारत–सर्वकार–यूनेस्कोसंस्था च मिलित्वा विश्वे सर्वत्र आयोज्येते। विश्वेऽस्मिन् प्रतिवर्षं श्रावणमासे सप्तदिनानि यावत् संस्कृतसप्ताह: आचर्यते। भारतस्य विभिन्नेषु स्थानेषु संस्कृतप्रेमिणः संस्कृतदिनम् अथवा संस्कृतसप्ताहः अत्युत्साहेन आचरन्ति । पाठशालासु विश्वविद्यालयेषु संस्कृतप्रचारकर्तृसंस्थासु च संस्कृतसप्ताहस्य संस्कृतदिवसस्य च विशिष्टम् आयोजनं भवति नाटकानि नृत्यानि प्रदर्शन्यः पदयात्राः संस्कृतगीतानां गायनम् इत्यादयः प्रवृत्तयः आभारते भवन्ति। भारते वर्षस्य 365 दिनानि अपि संस्कृतदिनानि भवेयुः – श्रावणपूर्णिमा–संस्कृतोत्सवस्य दिनम्। ततः पूर्वतनानि त्रीणि दिनानि अनन्तरीयाणि त्रीणि दिनानि च मेलयित्वा

संस्कृतसप्ताहः आचरणीयः इति केन्द्रसवर्करिण उद्घोष्टम् अस्ति। यद्यपि भारते वर्षस्य ३६५ दिनानि अपि संस्कृत दिनानि भवेयुः तथापि अद्य सा स्थितिः नास्ति। आनेतव्या तादृशी परिस्थितिः इति उद्देशेन साङ्केतिकरूपेण संस्कृतदिनस्य सप्ताहस्य च आचरणं वयं कुर्मः। संस्कृतं समाजव्यापी भवेत्। लोक व्यवहारे आगच्छेत्। तदर्थं सर्वैरपि संस्कृतं स्वीयनित्य जीवने आचरणीयम्। कार्यक्रमस्य मुख्यातिथिः तथा महाविद्यालयस्य प्राचार्या डा. सुनीताभार्गवमहोदया प्रोक्तवती यत् विकासस्य मूलमन्त्रः संस्कृतं वर्तते। संस्कृतभाषा आधुनिकविज्ञानस्य आधारशिला अस्ति। संस्कृतभाषायाः विज्ञानेन तकनीक्या सह गहनः सम्बन्धः वर्तते। गुरुत्वाकर्षणस्य सिद्धान्तः न्यूटनेन न अपितु सहस्रवर्षेभ्यः प्राक् महर्षिणा कणादेन प्रदत्तमासीत्। मनोविज्ञानं दर्शनं गणितं योगः आयुर्वेदः अर्थशास्त्र प्रबन्धनं भूगोलविज्ञानं पदार्थविज्ञानम् इत्यादिकं सर्वमपि ज्ञानविज्ञानमस्माकं ऋषयः वैदिकसाहित्ये संस्कृतशास्त्रेषु च अनादिकालात् लोककल्याणार्थं प्रदत्तवन्तः। तेषु संस्कृतग्रन्थेषु विद्यमानस्य ज्ञानभण्डारस्य परिज्ञानायं सर्वैरपि संस्कृताध्ययनं करणीयम्। संस्कृतं केवलं भाषा न अपितु सम्पूर्णमपि जीवनदर्शनम् अस्ति। डॉ० महेशपारिक: संस्कृतस्य विषये स्वविचारान् प्रस्तुतवान्। तेनोक्तं यत् अस्माकं भारतीयपरम्परायां महर्षिः पतञ्जलिः शारीरिकस्वास्थ्यस्य कृते योगासनं, मानसिकस्वास्थ्यस्य कृते च ध्यानं प्राणायामञ्च शिक्षितवान्। डॉ. रतनभारद्वाज: अपि अस्मिन् कार्यक्रमे सारस्वतातिथित्वेन स्वीयोद्बोधने संस्कृतस्य दशा तथा दिशाविषये सर्वान् सम्बोधितवान्। शिक्षकदिवसमालक्ष्य तेन कथितं यत् शिक्षकः न केवलं पाठयति अपितु प्रशिक्षकः अथवा प्रशिक्षणस्य कर्ता अपि भवति सर्वेषु अर्थेषु शुभचिन्तकः परिचर्याकर्ता च भवति। धर्मज्ञो

धर्मकर्तश्च सदा धर्मपरायणः। तत्वेभ्य: सर्वशास्त्रार्थदेशको गुरुरुच्यते॥ अस्यार्थः यत् ये धर्मज्ञाः धर्मानुसारं वर्तन्ते धार्मिकाः सर्वशास्त्रेभ्यः तत्त्वान् क्रमयन्ति ते गुरव उच्यन्ते। समग्रकार्यक्रमस्य सञ्चालनं केन्द्रछात्रेण कुलदीपशर्मणा कृतम्। रश्मिशर्मा स्वागतगीतं तथा सोनूप्रजापति संस्कृतगीतं प्रस्तुतवती। अस्मिन् समये महाविद्यालयस्य शिक्षकेषु जी०एल० शर्मा, रीटा झाझरिया, श्वेताभार्गव:, कल्पना, ममता, डॉ० अञ्जनाग्रवाल, खुशहाल–महाशयः, कृपाशंकरसहितसमस्तमहाविद्यालयपरिवार: तथा छात्राध्यापकाश्चोपस्थिता: अभवन्। शान्तिपाठेन अस्य कार्यक्रमस्य परिपूर्तिरभवत्। जयतु संस्कृतम्।।

संस्कृत-सामान्यज्ञान-प्रतिस्पर्धायोजनम्

आयोजकम् – उत्तरप्रदेशसंस्कृतसंस्थानम्, लखनऊ

स्थानम् – श्रीवामदेव-संस्कृत-महाविद्यालयः, बाँदाजनपदः

दिनाङ्कः – ०९.०९.२०२३

वार्ताप्रेषकः – आचार्य-दीनदयाल-शुक्ल:

वार्तासौजन्यम् – ट्विंकलमोहान्तिः

सितम्बरमासस्य ०९/०९/२०२३ तमे दिनाङ्के उत्तरप्रदेशसंस्कृतसंस्थानम् लखनऊद्वारा

श्रीवामदेवसंस्कृतमहाविद्यालयः बाँदाजनपदे संस्कृतसामान्यज्ञानस्य विविधाः जिलास्तरीयाः प्रतियोगिताः आयोजिताः। यस्मिन् १५० तः अधिकाः संस्कृतछात्राः भागं गृहीतवन्तः । आसु प्रतियोगितासु मुख्यतया श्रीवामदेवसंस्कृतमहाविद्यालयः, संकटमोचन-संस्कृत-उच्च-माध्यमिक-विद्यालयः भुजरख, शासकीय-इण्टर-कॉलेज बबेरुः, आर्यकन्या-इण्टर-कॉलेज बांदा डी.ए.वी इण्टर कॉलेज बांदा, पंडित-जवाहरलालनेहरू इण्टरमीडिए-कॉलेज-गिरवाँ, सरस्वती-विद्या-मन्दिर-बांदा, राजकीय-महिला-महाविद्यालयसहितं केचन् विद्यालयाः महाविद्यालयाः च भागं गृहीतवन्तः। सर्वेषां विद्यालयानां छात्राः उत्तमं प्रदर्शनं कृतवन्तः। यस्य विवरणं यथा-
पुस्तकशब्दप्रतियोगितायां ज्योतिः प्रथमस्थानं, महेशः द्वितीयं, नेहासिंहं तृतीयस्थानं प्राप्तवान्। अपि च संस्कृतगीते प्रज्ञा-द्वितीयं स्थानम् संस्कृत सामान्यगीतप्रतियोगिता- २. ज्योति नेहा च संयुक्तरूपेण प्रथमस्थानं प्राप्तवत्यौ। तिसृष्वपि स्पर्धासु उत्तमं प्रदर्शनं कृत्वा सर्वेषां छात्राणां पुरस्कारैः प्रमाणपत्रैः च अभिनन्दितम्। प्रतियोगितासमये मुख्यातिथित्वेन पूर्वसैन्याधिकारी श्रीराजेन्द्रसिंहवर्यः समुपस्थितोऽभवत्। अथ च जनपदस्य जिलाविद्यालयनिरीक्षकः श्रीविजयपालसिंहः विशिष्टातिथित्वेन साक्षिभूतोऽभवत् । सहैव वामदेवसंस्कृतविद्यालयस्य प्राचार्यः डॉ. अशोककुमारअवस्थी समुपस्थितः आसीत्। निर्णायकत्वेन राष्ट्रपतिसम्मानप्राप्तः प्रथितयशसः श्रीराजकुमारवर्यः तथा संस्कृतमहाविद्यालयः साथी इत्यस्य पूर्वप्रधानाचार्यः श्रीरमेशद्विवेदी, मन्नूलाल-संस्कृत-महाविद्यालयस्य प्रधनाचार्यः श्रीशिवनारायणत्रिवेदी, अखण्ड-इण्टरकालेज-कबरई इत्यस्य पूर्वप्राचार्यः श्रीगयाप्रसादत्रिपाठिना सहभागः कृतः। अवसरेऽस्मिन्

महाविद्यालयस्याचार्येषु अभयपाण्डेय:, श्रीसूरजबलीगुप्त: एवं प्रतियोगितायाः संयोजक: आचार्यरामभवनतिवारी सहैव विद्यालयस्य शिक्षक: एवं प्रवक्ता श्रीशिवपूजनत्रिपाठिसहितं विभिन्न विद्यालयानां शिक्षका: प्रेक्षका:, छात्राश्चोपस्थितारभवन्। संयोजकः अवदत् यत् शीघ्रमेव सर्वेषां कृते विभागस्तरीयप्रतियोगितानां आयोजनं भविष्यति, यस्याः तिथिः पश्चात् निर्धारिता भविष्यति।

महाविद्यालये सत्रारम्भे नवागन्तुकछात्रेभ्य: अभिनन्दनकार्यक्रम:

स्थानम् – संजयशिक्षकप्रशिक्षणमहाविद्यालयः

स्थानम् – जयपुरम्

दिनाङ्कः – ११.०९.२०२३

वार्ताप्रेषकः – डॉ० महेशपारिक:

वार्तासौजन्यम् – ट्विंकलमोहान्तिः

११ सितम्बर २०२३ दिनाङ्के संजय शिक्षक प्रशिक्षण महाविद्यालये बी. २०२३-२४ तमस्य वर्षस्य सत्रस्य कृते नूतनसत्रस्य उद्घाटनकार्यक्रमस्य आयोजनं कृतम्। कार्यक्रमस्य उद्घाटनं मुख्यातिथिः प्रो. देवेन्द्र-सिंह-शेखावत: (शैक्षणिकः डीन, एपेक्स विश्वविद्यालय:, जयपुरम्) तथा प्रो. देवाशीषगोस्वामी (एसोसिएट रजिस्ट्रार, एपेक्सविश्वविद्यालय:, जयपुरम्) अपि च केन्द्रशिक्षक: केन्द्रीयसंस्कृतविश्वविद्यालय: दिल्ली, अनौपचारिकसंस्कृतशिक्षणकेन्द्रस्य केन्द्राधिकारिणी प्राचार्या डॉ.

सुनीता भार्गवः, डॉ. यशवंती गौड, डॉ. रीता झाझरिया च दीपं प्रज्वलितवन्तः। शिक्षाशास्त्री–द्वितीयवर्षस्य प्रशिक्षणार्थी बैकुण्ठमिश्रः  मंगलाचरणं कृतवान्। "अतिथि देवो भवः" भारतीयपरम्परानुसारं अतिथीनां नवछात्राणां च तिलकं प्रयोजयित्वा स्वागतगीतानि गीत्वा स्वागतं कृतम्। द्वितीयवर्षस्य छात्राः “गुरोः महिमा सर्वोपरिः वर्तते” इति प्रेरणादायकं गीतं प्रस्तुतवन्तः। महाविद्यालयस्य प्राचार्या डॉ. सुनीता भार्गवः अतिथिभ्यः पुष्पगुच्छं दत्त्वा स्वागतं कृत्वा नवीनप्रशिक्षुणां स्वागतं कृत्वा तेषां क्षमतां ज्ञात्वा स्वलक्ष्यं मनसि कृत्वा प्रगतेः मार्गे अग्रे गन्तुं मार्गं प्रशस्तवती। मुख्यातिथिः प्रो० देवेन्द्रसिंहशेखावतः महापुरुषाणां उदाहरणानि दत्त्वा उक्तवान् यत् जीवने अग्रे गन्तुं आत्म-अनुशासनं अभ्यासः ज्ञानं च आवश्यकम् अस्ति। सः 360 Growth and 180 Transformation विषये अवदत्। सः प्रशिक्षुभ्यः एस०टी०टी०सीतः पूर्वमपि एसटीटीसी-पश्चात् अपि तथा आत्म-अनुशासनार्थं स्वयमेव १० प्रतिज्ञाः कर्तुं संकल्पं कृतवान्। प्रो. देवशीषगोस्वामीवर्यः विवेकानन्दस्य शैक्षणिकसिद्धान्तानां विषये कथितवान् यत् सः कर्मयोगी कर्मविश्वासः आसीत्। सोऽवदत् यत् समाजः परिवर्तमानः अस्ति अद्य वयं संस्कृतभाषायाः आङ्ग्लभाषायाः कृते प्राप्तवन्तः। अस्माभिः शिक्षायाः कार्यस्य च माध्यमेन भारतस्य भविष्यं अधिकं सुवर्णमयं कर्तव्यम्। आचार्यः संस्कृतभाषायाः संरक्षणाय प्रचाराय च अस्माकं दायित्वं संस्कृतस्य महत्त्वं वर्णयित्वा प्रशिक्षकान् संस्कृतशिक्षणाय प्रेरितवान्। डॉ. श्वेताभार्गवः सफलतया कार्यक्रमस्य मंचनं कृतवती। कार्यक्रमस्य अन्ते डॉ. यशवन्ती गौरः उपस्थितानां सर्वेषां महाविद्यालयसदस्यानां हृदयेन अभिनन्दनं कृत्वा अस्य

कार्यक्रमस्य सफलीकरणे प्रत्यक्षं परोक्षं च योगदानं दत्तवन्तः सर्वेषां प्रति आभारं प्रकटिता।

शिक्षकप्रशिक्षणमहाविद्यालये वैदिकयज्ञं विधाय नूतनसत्रस्यारम्भोऽनुष्ठितः

आयोजकः – संजयशिक्षकप्रशिक्षणमहाविद्यालयः

स्थानम् – जयपुरम्

दिनाङ्कः – १३.०९.२०२३

वार्ताप्रेषिका – डॉ. सुनीता भार्गवः

वार्तासौजन्यम् – ट्विंकलमोहान्तिः

वैदिककालात् सनातनसंस्कृतौ यज्ञस्य हवनस्य च परम्परा अस्ति यस्य माध्यमेन पर्यावरणस्य शुद्धिः मानवानां बौद्धिक-आध्यात्मिक-शारीरिक-विकासः च सम्भवति। अद्य एताः सर्वाः वार्ताः मनसि कृत्वा नूतनाः अध्येतारः प्रवेशं कृतवन्तः। जयपुरस्थ संजयशिक्षकप्रशिक्षणमहाविद्यालये शिक्षाशास्त्री तथा बी०एड० छात्राणां कृते यज्ञकार्यक्रमस्य आयोजनं कृतम् यस्मिन् सर्वे छात्राः शिक्षकाः च यथासम्भवं भागं गृहीतवन्तः। कार्यक्रमस्य आरम्भः भगवान्–गणेश–देवीलक्ष्मी–देवीसरस्वत्याः आराधनेन अभवत्। तदनन्तरं सर्वे नवप्रवेशिताः छात्राः शिवस्य संकल्पं कामयन्तः ललाटे तिलकं हस्ते रक्षासूत्रं च बद्ध्वा अध्ययनं कर्तुं प्रेरिताः अभवन् । तदनन्तरं महाविद्यालयस्य प्राचार्या डॉ. सुनीता भार्गवेन एपेक्स

इन्टरनेशनलस्कूल इत्यस्य वर्तमाननिदेशिका डॉ. सीतनजूनीवाल: च वैदिक आचार्यवर्याणां सङ्गमे यज्ञस्य कार्यक्रम: आरब्धवत्यौ। अस्मिन् अवसरे महाविद्यालयस्य प्राचार्य: सर्वान् छात्रान् प्रेरितवान् यत् यज्ञस्य माध्यमेन अस्माकं वातावरणं शुद्धं भवति, मन: आत्मा बुद्धि च शुद्धा: भवन्ति तथा च व्यक्ते: बौद्धिक: आध्यात्मिक: च विकास: भवति, अत: अस्माभि: सर्वै: दैनन्दिनजीवने यज्ञ: कर्तव्य:। देशभक्ति-आध्यात्म-भावनया ओतप्रोता: सर्वे छात्रा: स्वजीवनं सुदृढं कर्तुं प्रतिज्ञां कृतवन्त:। अस्मिन् अवसरे मरुधर–बालिकाविद्यालयस्य प्राचार्या डॉ. यशवन्ती गौर तथा संजय शिक्षकस्य सर्वे प्राध्यापका: छात्राध्यापका: छात्रशिक्षका: च प्रशिक्षणमहाविद्यालयेन सह नवप्रविष्टा: छात्रा: चोपस्थिता: आसन् तथा च कार्यक्रमस्य अन्ते प्रसाद: सर्वेभ्य: वितरित:। जयतु संस्कृतम्।

ओजस् २०२३ इत्यस्यां प्रतिस्पर्धायां शिक्षका: पुरस्कृता:

आयोजक: – संजयशिक्षकप्रशिक्षणमहाविद्यालय:

स्थानम् – जयपुरम्

दिनाङ्क: – १४.०९.२०२३

वार्ताप्रेषिका – डॉ. अल्पनाशर्मा

वार्तासौजन्यम् – ट्विंकलमोहान्ति:

हिन्दीदिवसमुपलक्ष्य जयपुरे संजयशिक्षकप्रशिक्षणमहाविद्यालयेन १४ सितम्बर २०२३ दिनाङ्के अन्तरमहाविद्यालयी प्रतियोगिता:

ओजस् २०२३ इत्यस्य आयोजनं विहितम्। अस्मिन् अवसरे प्रतिभागिनः सुमधुरस्वरयुक्तानि काव्यानि पठितवन्तः। अस्मिन् काव्यपाठे श्रृंगाररसतः वीररसपर्यन्तं स्वरचितकाव्यद्वारा विभिन्नविधा भाव:, अलंकार:, गौसेवा, कौन हूँ मैं, हिन्दी तुझे सलाम, हमारा मान है हिन्दी, "पापा की नन्ही परी" आदि उपमाभिः युक्तं इत्यादिः सुन्दरं प्रस्तुतीकरणं कृत्वा सम्पूर्णं वातावरणं सुखदं कृतवान्। निर्णायिकैः मूल्याङ्कने सारगर्भितशब्दानां प्रयोगे समयप्रतिबद्धतायाः उच्चैः शब्दस्य च विशेषं ध्यानं दत्त्वा प्रथमद्वितीयतृतीयस्थानार्थं प्रतिभागीनां चयनं कृतम्। कार्यक्रमे २५ महाविद्यालयेभ्यः ५० प्रशिक्षुप्रतिभागिनः १२ शिक्षकप्रतिभागिनः च भागं गृहीतवन्तः। प्रशिक्षुवर्गे प्रथमस्थानं हर्षिता हल्देनिया, बियानी-बालिका-महाविद्यालयः, द्वितीयस्थानं कलादित्य–केशव–शर्मा संजयशिक्षकप्रशिक्षणमहाविद्यालयः, तृतीयस्थानं नेहा चौधरी मेहताशिक्षक-प्रशिक्षणमहाविद्यालयः तथा राशि जैन एस. जैन सुबोधशिक्षक-प्रशिक्षण-महाविद्यालयद्वारा प्राप्तः। शिक्षकवर्गे प्रथमस्थानः डॉ. पुष्पादेवी (आकाशशिक्षक-प्रशिक्षण-महाविद्यालय-जयपुरम्), द्वितीयस्थानं श्रीमती उषाशर्मा (संजयशिक्षक-प्रशिक्षण-महाविद्यालयः) तथा तृतीयस्थानं श्रीमती इतीशर्मा (मीराबालिका-महाविद्यालय) द्वारा प्राप्तः। प्राचार्यः निर्णायकश्च कार्यक्रमे प्रथमद्वितीयतृतीयस्थानं प्राप्तवन्तः सर्वेषां प्रतिभागिनां स्मृतिचिह्नानि प्रमाणपत्राणि च दत्त्वा सम्मानितवन्तः प्रेरिताः च। प्रतियोगितायाः सर्वेषां प्रतिभागिनां प्रमाणपत्रैः अपि सम्मानः कृतः। कार्यक्रमस्य अन्तिमभागे कार्यक्रमसमन्वयिका डॉ. अल्पना शर्मा प्रत्यक्षतया परोक्षतया च भागं गृहीतवन्तः सर्वेभ्यः धन्यवादं दत्तवती। प्रेषितश्च

शुभकामना अभिवादनानि अस्मिन् शुभे दिने सर्वे भागगृहीतारः तथा विभिन्नमहाविद्यालयानां शिक्षकाः छात्राश्चोपस्थिताः समभवन्।

संस्कृतविद्वद्भिः काश्यां भारतीयज्योतिषसंस्थानन्यासस्य नवमं स्थापनादिवसम् आचरितम्

आयोजकः – भारतीयज्योतिषसंस्थानन्यासः

स्थानम् – वाराणसी

दिनाङ्कः – १५.०९.२०२३

वार्तप्रेषकः – आचार्यदीनदयालशुक्लः

वार्तासौजन्यम् – ट्विंकलमोहान्तिः

अद्य 15 सितम्बर 2023 दिनाङ्के भारतीयज्योतिषसंस्थानन्यासस्य वाराणसी-संस्थायाः अधिकारिभिः संस्थायाः अष्टमवर्षं नवमं च स्थापनादिवसम् आचरितम्, यस्मिन् अवसरे अनेकेषां मूर्धन्यविद्ववद्जनानां मार्गदर्शनं प्राप्तम्। अस्मिन् कार्यक्रमे काशीहिन्दूविश्वविद्यालयस्य धर्मागमविभागस्य पूर्वाचार्याः डॉ. भक्तिपुत्ररोहतमवर्याणां मुख्यातिथित्वेन समागतः। विशेषातिथित्वेन काशीहिन्दूविश्वविद्यालयस्य धर्मागमविभागस्य वर्तमानाचार्यः डॉ. कृष्णानंदसिंहः तेन सर्वे अपि प्रचोदिताः। अथ च सारस्वतातिथिः "मिर्जापुर-ब्लड-डोनर-क्लब" फाउंडेशन इत्यस्य प्रमुखः एवं संस्थापकः श्रीकृष्णानंदहैहयवंशी महाशय उपस्थितः आसीत्। यस्य माध्यमेन अस्यां श्रृङ्खलायां सर्वेषां जनानां मार्गदर्शनं संस्थायाः

निवासी तथा संस्थापकः वर्तमानाध्यक्षः आचार्यः अम्बिकेशदुबे इत्यनेन कृतः। यः कार्यक्रमे उपस्थितानां सर्वेषां जनानां स्वागतं अभिनन्दनं च कुर्वन् संस्थायाः अस्याः ८ वर्षीययात्रायाः विषये जनान् अवगतवान् तथा संस्थासमाजाय निरन्तरं स्वकार्यं कुर्वती अस्ति। एतेषु नववर्षेषु भारतीयज्योतिषसंस्थायाः विकासयात्रायां अनेकविधप्रशिक्षणाः संस्कृतभाषाशिक्षकाः भारतीयज्योतिषशास्त्रस्य अनेकविषयाणाम् अध्यापकाः यथा हस्तरेखा टैरोकार्डसम्बद्धाः विषयाः गणितं परिणामं च सम्बद्धाः विशेषप्रकाराः कक्षाः च सम्पादिताः ज्योतिषशास्त्रम्। भारतीयज्योतिषसंस्था समये समये अनेकविध-वेबिनार-गोष्ठी-आयोजयति, स्नेह-मिलन-कार्यक्रमः, होलिका-उत्सवः, अनुभव-स्मृति-आदि-बहुविध-कार्यक्रमेषु समाजाय विविध-प्रकारेण लाभं करोति। निःशुल्क-शिक्षा-प्रदानं च शिक्षा-प्रदानं तथा च सनातन-धर्म-आध्यात्म-कृते इयं संस्था उष्णकटिबंधीयम् अस्ति। अस्य संस्थायाः शाखाः २२ राज्येषु प्रसारिताः सन्ति यत्र अत्रत्याः श्रमिकाः विविधकार्यं प्रेरयन्ति। सम्प्रति UGC NET code 25 तथा 73 संस्कृतभाषायाः निःशुल्कवर्गाः अपि भारतीयज्योतिषसंस्थाभिः संचालिताः सन्ति। अन्ते उपस्थितानां सर्वेषां श्रमिकाणां धन्यवादेन तस्य समाप्तिः अभवत्। अवसरेऽस्मिन् आचार्यपवनमिश्रः एवं नितेशमिश्रः, सुनीतासहारनः, श्रीमतीसंगीतासुयालः, नीरजकौशिकसहित अनेके पदाधिकारिणः एवं कार्यकर्तारः समुपस्थिता अभवन्।

"संस्कृतपरम्परासंवर्धने अनुसूचितजातीनां जनजातीनां च योगदानम्" इति विषयमधिकृत्य दिवसद्वयव्यापिनी राष्ट्रियसंङ्गोष्ठी

तिथी - सितम्बरमासस्य 29-30 दिनाङ्कौ

आयोजकौ – केन्द्रीयसंस्कृतविश्वविद्यालयः- संस्कृतभारती च ।

स्थानम् – भोपालम्

“संस्कृतपरम्परासंवर्धने अनुसूचितजातीनां जनजातीनां च योगदानम्” इति विषयमधिकृत्य दिवसद्वयव्यापिनी राष्ट्रियसंङ्गोष्ठी सुसम्पन्ना

केन्द्रीयसंस्कृतविश्वविद्यालयः- संस्कृतभारती इत्यनयोः संयुक्ततत्वावधाने “संस्कृतपरम्परासंवर्धने अनुसूचितजातीनां जनजातीनां च योगदानम्” इति विषयमधिकृत्य सितम्बरमासस्य 29-30 दिनाङ्कयोः दिवसद्वयव्यापिनी  राष्ट्रियसङ्गोष्ठी केन्द्रियसंस्कृतविश्वविद्यालयस्य भोपालपरिसरे आयोजिता ।

कार्यक्रमस्य विवरणम् –

उद्घाटनसत्रे मुख्यातिथिरूपेण प्रो. मिथिलाप्रसादत्रिपाठीमहोदयाः, कुलपतिचराः, म. पा. संस्कृतवैदिकविश्वविद्यालयः, उज्जयिनी, सारस्वतातिथिरूपेण प्रो. मुरलीमनोहरपाठकमहोदयाः, कुलपतयः श्री ला. ब. शा. रा. संस्कृतविश्वविद्यालयः, नवदेहली, सम्मानितातिथिरूपेण प्रो.सुद्युम्नाचार्यवर्याः, अध्यक्षः वेदवाणीवितानम्, सतना, विशिष्टातिथिरूपेण प्रो. हरिरामरैदासमहोदयाः संस्कृतविभागाध्यक्षचराः, शा. ह. क. वा. महाविद्यालयः, भोपालम्, अध्यक्षरूपेण के. सं. विश्वविद्यालयस्य कुलपतयः प्रो. श्रीनिवासवरखेडीमहोदयाः च समुपस्थिताः आसन् । मुख्यातिथिः स्वोद्बोधने – “अस्माकं देशे ज्ञानस्य आधारेण मनुष्यस्य

आदरः भवति स्म, न तु जाति आधारेण। ते निषाद-विदुर-संजय इत्यादीनामुदाहरणमाध्यमैः वैदिकपरम्परायाः सन्दर्भं प्रदर्शितवन्तः।” विशिष्टातिथिः स्वभाषणे प्रोक्तवन्तः यत् “अस्माकं देशे अनुसूचितजातीनाम् अनुसूचितजनजातीनां च दृढपरम्परा विद्यते, परन्तु मध्ययुगीनकाले तेषां मनसि भयोत्पादनस्थितिरुत्पादिता, अतः पुनः तेषां देशे योगदानाय संस्कृतक्षेत्रे अनुसन्धानस्य आवश्यकता वरिवर्तते।” सम्मानितातिथिः स्वकथने – “वेदेषु 'जाति' शब्दस्य प्रयोगः न भवति स्म अपि तु 'जन' इति शब्दः प्रयुक्तः। अपि च ते कर्मस्य महत्त्वमाधारिकृत्य विविधकर्तव्यादिषु प्रकाशनं क्षिप्तवन्तः। विशिष्टातिथिः स्वभाषणे – “विविधवैदिकमन्त्रपुराणानाम् उदाहरणं दत्तवान्। व्यक्तेः महत्त्वं तस्य कर्माश्रितं भवति न तु जात्याश्रितमिति”। अध्यक्षाः स्वोद्बोधने उक्तवन्तः यत् “देशे संस्कृतपरम्परायाम् अनुसूचितजातीनाम् जनजातीनां च योगदानविषये भोपाले देशस्य महत्त्वपूर्णसङ्गोष्ठी आयोजिता, यया तेषां योगदानं ज्ञातुं शक्यते। देशस्य सामञ्जस्यार्थं तस्मिन् विषये संशोधनं कर्तुं शक्यते” इति उक्त्वा कार्यक्रमस्य आयोजकान् अभिनन्दितवन्तः।

कार्यक्रमस्य शुभारम्भः मातासरस्वतीप्रतिमायाः सम्मुखे दीपप्रज्ज्वालनेन मालार्पणेन च जातः, तदनन्तरं परिसरनिदेशकः प्रो. रमाकान्त पाण्डेयवर्याः प्रास्ताविकं भाषणं दत्तवन्तः, संगोष्ठ्याः संयोजकः प्रो.नीलभ तिवारीमहोदयाः स्वागतभाषणं प्रस्तुतवन्तः, सङ्घोट्याम् अस्यां ६५ अधिकाः संस्कृतविद्वांसः स्वशोधनपत्राणि प्रस्तुतवन्तः। कार्यक्रमस्य संचालनं आयुषदीक्षितमहोदयेन श्रीश्रीशराव भेड़सगावकरमहोदयेन च कृतम्।

समापनसत्रे मुख्यातिथिरूपेण प्रो सी जी विजयकुमारमेननमहोदयाः, कुलपतयः, म. पा. संस्कृतवैदिकविश्वविद्यालयः, उज्जयिनी, सारस्वतातिथिरूपेण प्रो सी उपेन्द्र रावमहोदयाः, वरिष्ठचार्यः ज.ने.विश्वविद्यालय नवदेहली, सम्मानितातिथिः प्रो.राजेश्वरमिश्रमहोदयाः, संस्कृतविभागाध्यक्षचराः, कुरुक्षेत्रविश्वविद्यालयः, कुरुक्षेत्रम्, अध्यक्षाः परिसरनिदेशकः प्रो. रमाकान्त पाण्डेयवर्याः च आसन्। कार्यक्रमस्य संचालनं डॉ. ललितमोहन पन्तोलामहोदयः कृतवान्।

कार्यक्रमेऽस्मिन् तिरुपतिः, गुरुवायुर्, अगरतला, कुरुक्षेत्रम्, जयपुरम्, पुरी, पुणे, गरली, भोपालम्, सतना इत्यादिनानाप्रान्तेभ्यः पञ्चषष्टिभ्यः अधिकाः शोधपत्राणि सप्तसत्रेषु प्रस्तुतवन्तः। शताधिकजनाः भागं गृहीतवन्तः। कार्यक्रमेऽस्मिन् परिसरस्य आध्यपकाः, शोधच्छात्राः, छात्राः, कार्यकर्तारः, समाजिकजनाश्च भागं गृहीतवन्तः।

Editor in Chief

DR. SUGYAN KUMAR MAHANTY

email - prachiprajnaenb@gmail.com

CENTRAL SANSKRIT UNIVERSITY, BHOPAL CAMPUS, BAGSEVANIYA, BHOPAL, M.P. INDIA, PIN – 462043

